ओम्

I

अधिमासक्षयमासौसर्वचांद्रेषुभवतः किंवाचैत्रा
द्यमासेष्वधिमासः कार्तिकादित्रयेषुक्षयमासइ
तिप्रश्नः अस्योत्तरम् सर्वचान्द्रेष्वधिमासक्षयमासा
वुपपद्येते तद्यथा अत्रस्पष्टमानेनामान्ताद
मान्तपर्य्यन्तश्चान्द्रमासस्तन्मध्येयदिमेषसंक्रांतिस्त
र्हिसचैत्रः वृषभसंक्रमणान्तर्हिसवैशाखः एवंमिथु
नेज्येष्ठइति क्रमेणद्वादशमेषादिसंक्रांतिवशानश्चैत्रा
दयोद्वादशमासाश्शुद्धाःस्युः योहिसंक्रांतिरहितःसोधि
कइतिसर्वसिद्धान्तः उक्तंच मेषादिस्थेसवितरियोयो
मासःप्रपूर्यतेचान्द्रःचैत्राद्योसौज्ञेयःपूर्तिद्वित्वेधिमा
सोन्यइति एवंसंक्रांतिरहितस्त्वाद्योधिमासः द्विसंक्रांति
मासःक्षयाख्यःकदाचिद्भवति तत्रचांद्रमासप्रमाणमेको
नत्रिंशद्दिनान्येकत्रिंशत् घटिकाःपंचाशत्पलानि २९।
३१।५० तथार्कमासस्त्रिंशद्दिनानिषड्विंशतिघटिकाःस
प्तदशपलानि ३०।२६।१७ एतावद्भिर्दिवसैरविर्मध्यगत्या
राशिंगच्छति अथग्रहस्पष्टादौफाल्गुनान्तदर्शान्तेमे
षसंक्रांतिस्ततश्चैत्रदर्शान्तादग्रतश्चतःपंचाशत्घटि
काभिःसावयवाभिर्वृषभसंक्रांतिः एवंद्व्यादिगुणि
ताभिस्ताभिर्घटिकाभिर्मिथुनादिसंक्रांतिरग्रतोग्रतोया
ति पुनर्दर्शान्तंप्राप्नोति तत्रैकोधिमासः पूर्णस्तत्रकिय
द्भिःसौरैरेकोधिमासोभवतीतिज्ञानार्थमनुपातः यदिसौ
रचांद्रांतरेणएकदिनात्मकेनैकोरविमासस्तदासंपूर्णचां
द्रैकमासेनकिमितिफलंसौरमासाः द्वात्रिंशत् ३२ षोड
शदिनानि १६ घटिकाचतुष्टय ४ यद्वाकल्पाधिमासः
कल्पार्कमासाःलभ्यंते तदेकेनकिमिति फलमेतावंत
एव एतावद्भिस्सौरैरेकोधिमासोभवति उक्तंचब्रह्मसिद्धां
ते द्वात्रिंशद्भिर्गतैर्मासैर्दिनैःषोडशभिस्तथा घटिकानां
चतुष्केणपतत्यधिमासकइति अत्रयोपपत्यामध्य

द्भिः सौरैरेकोऽधिमासो भवतीति ज्ञानार्थमनुपातः यदि सौ
रचांद्रांतरेण कुदिनात्मकेनैकोऽधिमासस्तदा संपूर्णचां
द्रैकमासेन किमिति फलं सौरमासाः द्वात्रिंशत् ३२ षोड
शदिनानि १६ घटिकाचतुष्टयं ४ यद्वा कल्पाधिमासैः
कल्पार्कमासाः लभ्यंते तदैकेन किमिति फलमेतावंत
एव एतावद्भिः सौरैरेकोऽधिमासो भवति उक्तं च ब्रह्मसिद्धां
ते द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा घटिकानां
चतुष्केण पतति ह्यधिमासकः इति अनयोपपत्त्या मध्य
मार्कसंक्रमणवशेन सर्वचांद्रेष्वधिमासो भवतीति सि
द्धम् क्षयमासस्तु मध्यमार्कसंक्रांतिवशेन नोपपद्यते
यतोऽर्कमासस्य चांद्रसावनांतःपातीन भवत्यत एवोक्तं
क्षयाख्यः कदाचिदिति नन्वयं चांद्रोऽधिमासो मध्यममा
नेन सर्वचांद्रेषु प्रतिपादितोऽपि न युक्तः मध्यममानस्य
वस्तुतोऽसत्त्वेन सत्त्वत्वेन च काल्पनिकत्वात् स्पष्टमा
नस्य वस्तुतः सत्त्वात्तदभिप्रायेणाधिमासस्य युक्तत्वादि
ति चेत् उच्यते स्पष्टमानेनासंक्रांतिरूपाधिमासज्ञानार्थ
मेवासन्नतया मध्यममानेनास्य निरूपणात्तथा मध्यममा
नाभिप्रायिकोऽधिमास एव वस्तुभूतस्पष्टमानेन परिण
मति अत एव स्फुट इति मूलोक्तेन मध्याधिमासस्यानिरा
सोऽव्यक्त एव अथ येन तदर्थ्यगतिकलाभिरेकं कुदिनं लभ्यते
तदैकराशिकलाभिः किमिति यद्वा गत्यंतरकलाभिरे
कं कुदिनं लभ्यते तदा चक्रांशकलाभिः किमित्यनुपाता
भ्यां स्पष्टगतेर्वैलक्षण्येन सौरचांद्रमाससावनयोर्ज्ञाना
संभवादन्यथा तज्ज्ञानमुच्यते तत्रार्ककुदिनज्ञानार्थं स्प
ष्टमेषादिद्वादशसंक्रांतिकालेषु स्पष्टसूर्याणां तज्ज्ञा म४
नात्स्फुटग्रहं मध्यखगं प्रकल्प्येत्यादि स्फुटाधिकारोक्त
विलोमविधिना तत्कालमध्यार्काः साध्याः ततस्तेषु द्व
योर्द्वयोः प्रत्येकमर्कयोरंतरं कृत्वा तदंशाः कार्याः ततो
ऽनुपातः यदि कल्पसौरदिनैः कल्पकुदिनानि लभ्यंते
तदैतैः कानीत्यनुपातेन प्रत्येकं संक्रांत्यंतररूपसावनदि
नानि स्पष्टसौरमासे भवंति एतानि यत्र गतेः परमाल्पत्वं
तत्र बहूनि यत्र गतेः परमत्वं तत्राल्पानीति स्ववोयम् अ
थ स्पष्टचांद्र[illegible]ग्रहणं संभवत्युक्तमा

[illegible]

थस्पष्टचांद्रमाससावनार्थमासान्तग्रहणमभूत्तुक्रमो
सगणःसाध्यः ततःकल्पचांद्रमासैःकल्पचंद्रसूर्यगत्
केंद्रभगणास्तदेष्टमासगणेकइत्यनुपातेनगतभगणां
स्त्यक्त्वाराश्यादिसूर्यचंद्रौमध्यमौतत्केंद्रेपिग्राह्ये केंद्रा
भ्यांयथोक्तप्रकारानीतफलसंस्कारद्वारास्पष्टौसूर्यचं।
द्रौमध्यममासांतेसाध्यौ ततस्तयोरंतरम्ंशाद्यंग्राह्यम्
तस्मात्सूर्यचंद्रभगणांतरस्वरूपचांद्रमासैर्भगणांशगुणैः
सूर्यभगणभागाःलभ्यंते तदानेनांशाद्येनकिमित्य
नुपातेनानीतांशाद्येनफलेनमध्यमसूर्यःहीनःकार्यः
स्पष्टसूर्यात्स्पष्टचंद्रोधिकश्चेत् अथयद्यूनस्तदापुनः
तस्पष्टचांद्रमासांतेमध्यमसूर्योभवति एवंप्रतिमासां
तेमध्यार्काःसाध्यास्तेभ्यःसौरसावनरीत्यास्पष्टचांद्रसा
वनदिवसादिकंदर्शांतयोर्मध्यस्थंसाध्यं तत्तुनैकरूपंचं
द्रोच्चस्यप्रतिदिनंभिन्नत्वात् परंतुदशपलाधिकैकाद
शघटिकाधिकत्रिंशद्दिनान्यधिकंभवति एतत्तुयत्सं।
क्रांतौचांद्रमाधिशेषंवर्षांतःपात्यधिकंतद्दूनत्रिंशद्दि
नमिताधिकस्पष्टस्त्वस्पष्टाधिमासपातस्तत्संक्रांत्य
वधिकालेनाग्रिमकाले इतिस्तुबोध्यं तत्रवर्षांतःपाति
चांद्राधिशेषस्यसंक्रांतिकालीनस्यज्ञानेयत्त्वर्षेचांद्राधि
शेषमधिक ११।३।५२।३० तत्सौरवर्षीयाधिकसावन
दिना ५।१५।३०।१२।३०वमदिनयो ५।४८।२२।७।३० र्योगे
नभवति सावनावमयोगेचांद्रत्वात् अतोमेषादिसंक्रां
तौयत्स्पष्टसौरसावनेतस्यत्रिंशतस्त्वांतरंत्रिंशद्दिनेभ्यो
धिकेस्पष्टसावनेधनाख्यं न्यूनेऋणाख्यं तेषांप्रति
संक्रमणंयथोक्तं प्रत्येकंयोगोधिकसावनदिनानिभ
वंति एवमेकवर्षीयावमदिनद्वादशांशेन ·१२।५१।२।५·
३।७।३०· प्रतिसंक्रमणमेकादिगुणेनयोजितेनचांद्रस्व
स्वसंक्रांतौभवति एवंरविमंदोच्चस्यद्वादशराशिषु।
स्थितिसद्भावान्मेषादिद्वादशसंक्रांतौचांद्रदिनाधिका
न्युपपद्यते अत्रसौरसावनाच्चांद्रसावनस्यन्यूनत्वात्त
त्रस्पष्टस्तुद्धिर्यत्संक्रांत्यधिदिनयुतात्रिंशदधिकातत्सं
क्रांतिमध्येधिमासस्त्वांद्रोभवति एवंद्विसंक्रांतिमासो
धियदास्पष्टचांद्रमाससावनदिनेभ्यःस्पष्टसौरमासस।
सावनदि[illegible]दैव न्यूनसौरमाससंभवस्तत्सूर्यप

त्रस्पष्टसूर्यस्य संक्रान्त्यधिदिनयुतात्रिंशादधिका तत्सं
क्रान्तिमध्येऽधिमाससंभवो भवति एवं हि संक्रान्तिमासो
ऽपि यदा स्पष्टचान्द्रमाससावनदिनेभ्यः स्पष्टसौरमासस
सावनदिनान्यल्पान्येव न्यूनसौरमाससंभवस्तु सूर्यप
रमगतौ नीचस्थितेऽर्केऽपरमगतिसद्भावान्नीचस्यापि
मेषादिराशिषु सद्भावात्सर्वचान्द्रेषु स्पष्टचान्द्रमाससा
वनात्स्पष्टसूर्यमाससावनस्य न्यूनत्वसंभवान्नो सर्व
चान्द्रेष्वधिमासक्षयमासाविति राद्धान्तः नन्वयद्येवं
तर्हि क्षयः कार्तिकादित्रये नान्यत्रस्यादिति महामहो
पाध्यायश्रीभास्कराचार्योक्तं कथं संगच्छते सत्यम्
अत्र गणितस्कंधे उपपत्तिमानेवागमः प्रमाणं अतोत्र
श्रीभास्करोक्तोपपत्त्या सर्वचान्द्रेषु क्षयमासो भवत्य
पि लोकानुकंपया शिष्यक्लेशभयार्थं च संप्रति मि
थुनेऽष्टादशे भागे मंदोच्चस्य स्थितिसद्भावात् कार्तिका
दित्रयेषु कार्तिकस्य आदित्रयं चेत्यत्रास्मवहितत्वेन
कार्तिकादित्रयं कार्तिकः आदिः पूर्वं यस्येति व्युत्पत्त्या
कार्तिकादिचतुष्टये पर्यवसानात्कार्तिकमार्गशी
र्षपौषमाघान्यतमेषु क्षयोक्तिसंभावनया तद्यथा
संप्रति यदा कन्यासंक्रान्तिः प्रतिपदि भवति तदानीं तु
लावृश्चिकसंक्रान्ती द्वितीयायां भवतः ततोऽग्रे धनुःसं
क्रान्तिरेभिर्दिनैस्तिथ्य २५।२७।३१ भ्यो यदा चान्द्रसावन
मधिकं स्यात्तदा कदाचिदमायां धनुःसंक्रान्तिरतो यच्चा
न्द्रो मासो धनुस्थसूर्येण समाप्त इति मेषादिस्थे सवि
तरीति वचनेन मार्गशीर्षसंज्ञः पूर्वचान्द्रमासस्तु तुला
स्थेन सूर्येण समाप्तत्वात्क्षितः अतः कार्तिकाख्यो
लभः यदामायां न संक्रान्तिः किंतु प्रतिपदि तदा वृश्चि
स॰ कार्केण मासे समाप्तेः कार्तिकः शुद्धः ततोग्रे मकरसंक्रा
न्तिरेभिः सावन २५।१५।३· दिनैस्तिथिभ्यश्चान्द्रसावनमा
धिकं यदा तदा मकरसंक्रान्तिरमायामत उक्तरीत्या मा
र्गशीर्षो लभः यदात्रापि न्यूनचान्द्रसावनेन प्रतिपदि म
करसंक्रान्तिस्तदा मार्गशीर्षो व्यक्त एव न लभस्ततोऽग्रे
कुंभसंक्रान्तिरेभिर्दिनैः २५।२८ तिथिभ्यो यदा चान्द्रसाव
नमधिकं तदामायां कुंभसंक्रान्तिरत उक्तरीत्या पौषो

लभः यदात्रापि न्यूनचान्द्रसावनेन तल्लभस्तदा मीन

त्वमः यदात्रापि न्यूनं चांद्रसावनेन नालमस्तदा मीन
संक्रांतिरेभिर्दिनै २५।४५।४३ रित्येभ्यश्चांद्रसावनम
धिकं चेत्तदा मीनसंक्रांतिरमायामित्युक्तरीत्या माघो।
त्वमः यदात्रापि न त्वयस्तदाग्रे मेषसंक्रांतिरेभिर्दिनैः
३।१२३।१३ रित्येभ्यश्चांद्रसावनदिनानामधिकत्वाभावा
त्तद्धि संक्रांतिमाससंभवः एवं कार्तिकादिचतुष्टयान्य
त्रमः क्षयमासस्संभवति उक्तं च सार्वभौमसिद्धांते अ
थार्कमाससावनं स्वेर्गतेर्महत्वतः यदेंदुमाससावना
द्भवेच्च हीनकं तदा कदाचिदिंदुमासको युतार्कसंक्रम
द्वयः द्विमाससंज्ञकः क्षयात् क्षयाभिधो मतिस्मृतः
क्षयमासात्पूर्वकालेग्रे च मासत्रयावधि अधिमासद्वयं
तत्र स्यादाद्यो गणितागतः एवं च साम्प्रतं चेत्स्यात्क्ष
यमासस्तदा खलु कार्तिकादिचतुष्केन्योऽधिमासः फा
ल्गुणेतकः तथा चोक्तं तत्वविवेकसिद्धांते स्फुटार्क
स्य संक्रांतयो मेषवक्राक्रमातास्त्वमान्तद्वयांतस्तदा
नीम् विशुद्धाश्च चैत्रक्रमाच्चांद्रमासाः सदा संज्ञया दाहृ
ताः प्राज्ञनीद्रैः असंक्रांतिमासो हि चांद्रोऽधिमासो हि
संक्रांतिमासः क्षयाख्यस्तदानी क्षयाख्यः कदाचित्ततः
प्राक्पश्चाद्वर्षपद्विनत्राधिमासद्वयं स्यात् स्फुटैर्लग्न
गैर्यैरयं नानि सर्वेष्वपि स्युर्मिथो चांद्रमासेषु काले अ
तोयं क्षयाख्यः सर्वचांद्रेष्वपीत्यं न जानंति सद्धासनाज्ञा
नश्चान्त्याः इदानीं तनार्थेन शास्त्रप्रवृत्तेन सत्कार्तिकादि
त्रयोऽन्येन तुल्ये सयुक्तानमन्युक्तिरप्यत्र शास्त्रे भवेत्का
र्यवर्यस्य याहग्विहस्ता ॥ ॥ इति शिवम्